अथास्थिकुम्भं सीतायां निदधाति —‘ सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभिरदिते शं भव ’ इति ॥ १६

अथानडुहो विमुञ्चति—‘ विमुच्यध्वमाघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्म ’ इति ॥

त एतेऽध्वर्यवो भवन्ति यदि दक्षिणावान् पितृमेधः । यद्यु वै सत्रियोऽग्निर्यथागवं व्युदञ्चन्ति ॥ १८

यत्रैवानड्वाहस्तद्युगलाङ्गलम् ॥ १९

अथैनमुपवातयति—‘ प्रवाता वान्ति पतयन्ति विद्युतः ’ इति ॥ २०

अग्निवत्स*वौषधीर्वपति—‘ यथा यमाय हार्म्यम् ’ इति ।

अत्र सिकता निवपति—‘ अग्ने तव श्रवो वयः ’ इति षड्भिरनुच्छन्दसम् ॥ २१

अथोर्ध्वचित उपदधाति—‘ चितस्स्थ परिचित ऊर्ध्व चितश्श्रयध्वं पितरो देवता। प्रजापतिर्वस्सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ’ इति ॥ २२

अथानुव्यूहति—‘ आ प्यायस्व’ इति गायत्र्या ब्राह्मणस्य । ‘ संते पयाꣳसि ’ इति त्रिष्टुभा राजन्यस्य ॥ २३

यथासुष्ठु यथाशर्करमनुव्यूहति ॥ २४

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने अष्टादशः खण्डः.

---

* अग्नींत्स.

अथ द्वाभ्यामात्मन्यग्निं गृह्णीते—'मयि गृह्णाम्यग्रे अग्निं, यो नो अग्निः' इति द्वाभ्याम् ॥ १

स्वयं चितिं जपति—'यास्ते अग्ने समिधो यानि धाम' इति ॥ २

श्वेतमश्वमभिमृश्याधिद्रवणं जपति—'अपामिदं न्ययनं, नमस्ते' इति द्वाभ्याम् ॥ ३

अथ क्षेत्रवितृण्णीं चतुरो लोष्टानुपदधाति—'उत्ते तभ्नोमि पृथिवीम्' इति पुरस्तादुपदधाति ॥ ४

'उपसर्प मातरम्' इत्युत्तरतः ॥ ५

'उच्छ्वञ्चस्व पृथिवि मा विबाधिथाः' इति पश्चात् ॥ ६

'उच्छ्वञ्चमाना पृथिवी हि तिष्ठसि' इति दक्षिणतः ॥ ७

तया देवतं कृत्वा सूददोहसः* करोति ॥ ८

अथैनं तिलमिश्राभिर्धानाभिरुपकिरति—'एणीर्धाना हरिणीः' इति ॥ ९

अथैतदभिवान्यायै दुग्धमर्धपात्रं दक्षिणत उपदधाति—'एषा ते यमसादने स्वधा निधीयते गृहे। अक्षितिर्नाम ते असौ' इति। अत्र यजमानस्य नाम गृह्णाति ॥ १०

तया देवतं कृत्वा सूददोहसं करोति ॥ ११

अथ दक्षिणतस्समूलं बर्हिर्निदधाति—'इदं पितृभ्यः प्रभरेम बर्हिः' इति ॥ १२

---

* सूददोहसं.

तया देवतं कृत्वा सूददोहसं करोति ॥ १३

अथ नळेषिकामुपदधाति—'नळं प्लवमारोह' इति ॥

तया देवतं कृत्वा सूददोहसं करोति ॥ १५

अथास्थिकुम्भं भुक्तभोगेन वाससा निर्णिज्य यथाऽङ्गं चिनोति—'सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तेभ्यः पृथिवि शं भव' इति ॥ १६

अत्र षड्ढोतारं व्याचष्टे—'षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः' इति। 'परं मृत्यो अनु परेहि पन्थाम्' इति च ॥ १७

अथैनमुपवातयति—'शं वातश्शं हि ते घृणिश्शमु ते सन्त्वोषधीः। कल्पन्तां मे दिशश्शग्माः' इति ॥ १८

अथैनान् पञ्च चरून् सापूपान् उपदधाति—'अपूपवान् घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन् पृथिवीं द्यामुतोपरि। योनिकृतः पथिकृतस्सपर्यत ये देवानां घृतभागा इह स्थ। एषा ते यमसादने स्वधा निधीयते गृहेऽसौ' इत्यत्र यजमानस्य नाम गृह्णाति ॥ १९

'दशाक्षरा ताꣳ रक्षस्व' इति पुरस्तादुपदधाति 'अपूपवान् शृतवान्' इत्युत्तरतः 'अपूपवान् क्षीरवान्' इति पश्चात् 'अपूपवान् दधिवान्' इति दक्षिणतः 'अपूपवान् मधुमान्' इति मध्ये 'शताक्षरा सहस्राक्षराऽयुताक्षराऽच्युताक्षरा' इति प्रतिदिशमनुषजति ॥ २०

तयादेवतं कृत्वा सूददोहसः करोति ॥ २१

अथैनं तिलमिश्राभिर्धानाभिरुपकिरति—'एतास्ते स्वधा अमृताः करोमि' इति ॥ २२

अथ चतुरस्स्तम्बान् उपदधाति चरूणामुपरिष्टात्—'त्वामर्जुनौषधीनाम्' इति पुरस्तादर्जुनस्तम्बं 'दूर्वाणां स्तम्बमाहर' इत्युत्तरतो दूर्वास्तम्बं 'काशानां स्तम्बमाहर' इति पश्चात् काशस्तम्बं 'दर्भाणां स्तम्बमाहर' इति दक्षिणतो दर्भस्तम्बम् ॥ २३

चतुर्णां स्तम्बानामग्रैर्मध्यमं चरुमपिदधात्येतैरेव चतुर्भिर्मन्त्रैः ॥ २४

तया देवतं कृत्वा सूददोहसः करोति ॥ २५

अथ चतुरो नानावृक्ष्यान् परिधीन् परिदधाति—मा त्वा वृक्षौ सम्बाधिष्ठाम्' इति पर्णमयवारणौ पुरस्ताच्चोत्तरतश्च । 'मा त्वा वृक्षौ सम्बाधेथाम्' इति वैतसशमीमयौ पश्चाच्च दक्षिणतश्च ॥ २६

तया देवतं कृत्वा सूददोहसौ करोति ॥ २७

अत्र नळेषीकावित्येके ॥ २८

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
एकोनविंशः खण्डः.

अथ लोष्टानुपदधाति ॥ १

'पृथिव्यास्त्वा लोके सादयाम्यमुष्य शर्मोऽसि पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति शतं पुरस्तादुपदधाति । 'अन्तरिक्षस्य त्वा लोके सादयामि' इति शतमुत्तरतः । 'दिवस्त्वा लोके सादयामि' इति शतं पश्चात् । 'दिशां त्वा लोके सादयामि' इति शतं दक्षिणतः । 'नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयामि' इति द्विशतं मध्ये ॥ २

तया देवतं कृत्वा सूददोहसः करोति ॥ ३

अथ लोकंपृणा उपदधाति—'लोकं पृणच्छिद्रं पृण' इति लोकंपृणाभिस्सहस्रं संपद्यते ॥ ४

द्विषाहस्रादिष्वेतान्येव पुनःपुनरुपदध्यात् ॥ ५

काठकाग्निचितावपि पञ्चाशीतिशतमुपदध्यात् ॥ ६

विज्ञायते—'अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्याऽऽमिक्षया वा' इति काठकाग्नीनां ब्राह्मणम् ॥ ७

तयादेवतं कृत्वा सूददोहसः करोति ॥ ८

अथावद्रुत्य कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति—'पृष्टो दिवि' इति ॥ ९

तयादेवतं कृत्वा सूददोहसं करोति ॥ १०

अथैनमुपवातयति—'शं वातश्शं हि ते घृणिश्शमु ते सन्त्वोषधीः । कल्पन्तां ते दिशस्सर्वाः' इति ॥ ११

अथैनमभिमृशति—'इदमेव मेतोऽपराम्' इति ॥ १२

पुरस्ताद्वारणीशाखां निदधाति—'वरणो वारयात्' इति॥

उत्तरतः क्षेत्रवितृर्णीं निदधाति—'विधृतिरसि' इति ॥

पश्चाच्छमीशाखां निदधाति—'शमि शमयास्मदघाद्द्वेषांऽसि' इति ॥ १५

दक्षिणतो यवान्निदधाति—'यव यवयास्मदघाद्द्वेषांऽसि' इति ॥ १६

अथैनमुपतिष्ठते—'पृथिवीं गच्छान्तरिक्षं गच्छ' इति ॥

जघनेन चितां तिस्रः दक्षिणाप्राचीः कर्षूः कुर्वन्ति । तत्पुरस्ताद्व्याख्यातम् ॥ १८

जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बध्वा विनिस्सर्पन्ति । तत्पुरस्ताद्व्याख्यातम् ॥ १९

यत्रापस्तद्यन्त्यनवेक्षमाणा अपस्सचेला दक्षिणामुखास्समृत्तिका आप्लवन्ते—'धाता पुनातु सविता पुनातु' इति ॥ २०

नामग्राहं त्रिरुदकमुत्सिच्योत्तीर्याचम्यादित्यमुपतिष्ठते—'उद्वयं तमसस्परि' इति ॥ २१

अथ गृहानायन्ति । यच्चात्र स्त्रिय आहुस्तत्कुर्वन्ति ॥ २२

अत्र शान्तिं कुर्वन्ति सौत्रामण्याः प्रत्याम्नायो भवत्या-
मिक्षया चेति ॥ २३

संतिष्ठते लोष्टचितिस्संतिष्ठते लोष्टचितिः ॥ २४

इति बोधायनीयपितृमेधसूत्रे प्रथमप्रश्ने
विंशः खण्डः.

---

अथ गृहानेष्यन्नुपकल्पयते—वारणं स्रुक्स्रुवं च वार
णान् परिधीन् कुशमयं बर्हिः पर्णमयमिध्मं रोहितं चर्मानडुहं
नवं च सर्पिराञ्जनं चाश्मानं चानडुाहं च शमीशाखां च कुशत-
रुणकानि च दर्भस्तम्बं चाञ्जनं च यवांश्चेति ॥ १

अथान्तरेण ग्रामं च श्मशानं च तद्बृधाऽग्निमुपसमाधाय
कुशमयं बर्हिस्तीर्त्वा वारणान् परिधीन् परिधाय पर्णमयमिध्म
मभ्यज्य स्वाहाकारेणाभ्याधायाथैतद्रोहितं चर्मानडुहं जघने-
नाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति ॥ २

तदारोहन्ति यावन्तोऽस्य ज्ञातयो भवन्ति—'आरोहतायु-
र्जरसं गृणानाः' इति ॥ ३

अथैनाननुपूर्वं कल्पयति—'यथाऽहान्यनुपूर्वं भवन्ति'
इति ॥ ४

अथ वारणेन स्रुवेण वारण्यां स्रुचि चतुर्गृहीतं गृहीत्वा
जुहोति—'न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्ब-

भस्ति ते जनं पुनर्जरायु गौरिव । अप नश्शोशुचदघमग्ने शुशुध्या रयिम् । अप नश्शोशुचदघं मृत्यवे स्वाहा' इति ॥ ५

अथ वारणेन स्रुवेणोपघातं जुहोति—'अप नश्शोशुचदघम्' इति द्वादश स्रुवाहुतीः ॥ ६

अथोपोत्थायानड्वाहमन्वारभन्ते—'अनड्वाहमन्वारभामहे स्वस्तये । स न इन्द्र इव देवेभ्यो वह्निस्संपारणो भव' इति ॥ ७

प्राञ्चो यान्ति—'इमे जीवा विमृतैः' इति ॥ ८

जघन्यश्शमीशाखया पदानि संलोपयन्ते—'मृत्योः पदम्' इति ॥ ९

अथान्तरेणाग्निं च श्मशानं चाश्मानमुपदधाति—'इमं जीवेभ्यः परिधिं दधामि' इति ॥ १०

अथैताः पत्नयो नवेन सर्पिषा संमृशन्ति—'इमा नारीरविधवाः' इति ॥ ११

कुशतरुणकैस्त्रैककुदेनाञ्जनेनाङ्क्ते—'यदाञ्जनं त्रैककुदं जातं हिमवतस्परि' इति ॥ १२

अथैतानि कुशतरुणकानि समुच्चित्य दर्भस्तम्बे निदधाति—'यथा त्वमुद्भिनत्स्योषधे' इति ॥ १३

प्रत्येत्य गृहानासन्दीं प्रोष्ठादय आरोहन्ति*—'अनश्रवो अनमीवास्सुशेवा आरोहन्तु जनयो योनिमग्ने' इति ॥ १४

* प्रोष्ठावित्यारोहन्ति.

अजं चैतदहः पचन्ते यवोदनं च ॥ १६

अजस्याश्नन्ति—'अजोऽस्यजास्मदघाद्द्वेषांसि' इति ॥ यवोदनस्य च प्राश्नन्ति—'यवोसि यवयास्मदघाद्द्वेषाँसि' इति ॥ १७

अथास्य श्राद्धं कुर्वन्ति । एकस्यां व्युष्टायां तिसृषु वा पञ्चसु वा सप्तसु वा नवसु वैकादशसु वाऽयुग्मेष्वहस्स्वर्धमासेषु मासेष्वृतुषु संवत्सरेषु वा दद्यात् । काममहरहरेकादशमासान्नयन्ति । न द्वादशमासमभ्यारोहन्ति । संवत्सरेसंवत्सर एतस्मिन्नहनि दद्यात् ॥ १८

य एष एवं विहितोऽनाहिताग्नेः स्त्रियाः पुल्लिङ्गपात्रचयनेष्टकाः केशवपनवर्जं पितुर्मातुराचार्यस्य वा क्रियते ॥ १९

सहस्रदक्षिणो वाऽप्यन्यस्य पितृमेधः ॥ २०

संतिष्ठते पितृमेधस्संतिष्ठते पितृमेधः ॥ २१

इति बोधायनपितृमेधे प्रथमप्रश्ने
एकविंशः खण्डः.

---

अथ गृहानेष्यन् । पृथिव्यास्त्वा लोके । अथ द्वाभ्यामात्मन्यग्निम् । ते महारात्र उत्थाय । एकाहं धुनुयुः । ते यदि पुनर्धक्ष्यन्तः । उत्तिष्ठ प्रेहि । अथातस्संचयनम् । अथ यद्याहिताग्निः । अश्मन्वती । अथैनमादीपयति । अग्नेर्वर्म । इममग्ने । इयं नारी । भुवनस्य पते । अथास्यावकाशम् । पूषेमाः । अथा-

तोऽनुस्तरणीकल्पम् । इदं त्वा वस्त्रम् । परेयुवांसम् । अथ यद्याहिताग्निः ॥ २१

अथ यद्याहिताग्निः । परेयुवांसम् । इदं त्वा वस्त्रम् । अथातोऽनुस्तरणीकल्पम् । पूषेमाः । अथास्यावकाशम् । भुवनस्य पते । इयं नारी । इममग्ने । अग्नेर्वर्म । अथैनमादीपयति । अश्मन्वती । अथ यद्याहिताग्निः । अथातस्संचयनम् । उत्तिष्ठ प्रेहि । ते यदि पुनर्धक्ष्यन्तः । एकाहं धुनुयुः । ते महारात्र उत्थाय । अथ द्वाभ्यामात्मन्यग्निम् । पृथिव्यास्त्वा लोके । अथ गृहानेष्यन् ॥ २१

इति बोधायनीये पितृमेधसूत्रे

प्रथमः प्रश्नः.

---

यथो एतदाहिताग्नेर्निमारं गच्छतः प्रतिकृष्य प्रातरग्निहोत्रं जुहुयात् प्रतिकृष्यामावास्यां यजेतेति तथैते कर्मणी अभि सञ्चरेद्यथा जीवतः कृते स्याताम् ॥ १

स उ चेदहुते प्रातरग्निहोत्रेऽनिष्टायाममावास्यायां प्रेयात्तदानीमेवास्य तूष्णीं प्रातरग्निहोत्रं यादृकीदृक्च होतव्यं तदानीमेवास्य तूष्णीममावास्यां यादृशीं कीदृशीं च यजेतेति ॥ २

स उ चेत्पुनरागतस्स्यात् पुनरेवास्य प्रातरग्निहोत्रं काल्यमव्यापन्नं होतव्यं पुनरेवामावास्यां काल्यामव्यापन्नां यजेतेति ॥ ३

यथो एतन्न पयस्समासिञ्चन्तीत्यामिक्षार्थं पयोऽवशेष-येयुरित्येवेदमुक्तं भवति ॥ ४

यथो एतदासन्द्यामौदुम्बर्यामासन्द्यामित्येवेदमुक्तं भवति॥

यथो एतदन्तर्वेदि शरीराणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्ध-मुपोषेयुरिति पात्रचयनप्रभृति सिद्धमत ऊर्ध्वम् ॥ ६

एतावदेव नाना नात्र गोरालम्भोऽनुस्तरणीकाले कुश-तरुणकैश्शुष्कगोमयैर्घृतेनेत्यनुस्तरणीयात् 'अग्नेर्वर्म परि गो-भिर्व्ययस्व' इत्येतदेव पर्णत्सरुषु । अपि वा यथेष्टिकल्पे । अपि वा तूष्णीं सर्वं कृत्वाऽन्यत्र गोरालम्भादिति । अपि वा तूष्णीमेव पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपो-षेयुरिति । अपि वाऽन्यत्र चैव गोरालम्भादिति ॥ ७

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
प्रथमः खण्डः.

---

अथ वै भवति प्रजापतिः प्रजास्सृष्ट्वा वृत्तोऽशयत्तं देवा भूतानां* रसं तेजस्संभृत्य तेनैनमभिषज्यन्निति तत्पृच्छन्ति कतमद्ब्राह्मणानां तेजो रसो येनैनमभिषज्यन्निति चतुर्होतार इत्येव ब्रूयात् ॥ १

---

* ख. ना ना .

तस्य सग्रहैर्होतृभिर्होमो भर्तृसूक्तेन भरणं पत्नीभिरुपसंवेशनं दक्षिणाप्रतिग्रहैर्निर्मार्गो हृदयैः हिरण्यशकलान्* सम्भारैः पात्रचयः ज्योतिष्मतीभिरुपोषणं नारायणाभ्यां 'ब्राह्मण एकहोता' इति चोपस्थानं 'प्रयासाय स्वाहा' इत्याज्याहुतीः 'चित्तं संतानेन' इति हविराहुतीः मृत्युसूक्तेनानुशंसनं सौम्यया संगाहनमीयुष्ट्वाऽवगाहनं सौर्येणादित्यस्योपस्थानमिति तानेतान् परं ब्रह्मेत्याचक्षते ॥ २

तान्न साधारणे श्मशाने प्रयुञ्जीत नानाचार्याय नाश्रोत्रियाय नागुरवे† ॥ ३

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने द्वितीयः खण्डः.

---

यथो एतद्धविर्यज्ञियं निवपनं पुनर्दाहश्चेति यदहस्सञ्चिनुयात्तदहरेवैतत्कुर्यात् ॥ १

कुम्भान्तमनाहिताग्नेः स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः‡ पुनर्दहनान्तं सोमयाजिनाश्चित्यन्तमग्निचितो यदीतरं यदीतरमघोदकमुत्सिच्य दशरात्रमाशौचम् ॥ २

दशरात्रे शौचं कृत्वा शान्तिः ॥ ३

अथ यदि चितिश्चित्यन्ते शौचम् ॥ ४

---

* ख. हिरण्यशकलात्. † ख. 'नाब्रह्मविदे कामं पित्रे च' इत्यधिकम्.

‡ ख. हविर्याजिनः.

चित्याः प्राक्पूभ्यः कृत्वा श्वोभूते धवनेनैव प्रतिपद्यते॥ प्रसिद्धमतऊर्ध्वमथैते*षामुदकम् ॥ ६

सपिण्डानां सबान्धवानां मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमात् पुरुषादाचार्यान्तेवासिनोश्च सपत्नीकानां सापत्यानां सपिण्डानां दशरात्रं त्रिरात्रमितरेषाम् ॥ ७

बाले देशान्तरस्थे च सद्यश्शौचमित्येके ॥ ८

एवं नित्योदकतर्पणेअनुस्मरणं स्त्रीयाज्याशिष्याणाम् ॥९

न प्राक् चौळात् प्रमीतानां दहनं विद्यते ॥ १०

नानुपनीतानां कन्यानां वा पितृमेधः ॥ ११

अनुपनीतानां कन्यानां वा पुनर्दहनमन्त्रेण दहेयुः ॥ १२

नानाहिताग्नेः पात्रचयो विद्यते ॥ १३

नापशुबन्धयाजिनां गौच्छगलाः ॥ १४

नासन्नयता मामिक्षा ॥ १५

नाग्निचितां चितिः ॥ १६

न स्त्रीणां केशवपनं विद्यते न चितिर्नेष्टका न पुनर्दाहो दारुवत्स्त्रीणां पात्राणि भवन्तीति विज्ञायते ॥ १७

बहूवृचां पितृमेधे स्त्रीणामिमान्मन्त्रानुपोद्धरेत् ॥ १८

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
तृतीयः खण्डः.

---

* ख. यथैते.

'इयं नारी पतिलोकम्, उदीर्ष्व नार्यभिजीवलोकं, सुवर्णं हस्तात्, धनुर्हस्तात, मणिं हस्तात्, मैनमग्ने, शृतं यदा, अजो भागस्तपसा, अयं वै त्वम्, इदं त एकम्, यौ ते श्वानौ, यत्ते कृष्णः, उत्तिष्ठ प्रेहि, अस्मात्त्वम्, अपेत वीत, उच्छ्मञ्चस्व पृथिवि मा विबाधिथाः' इति ॥ १

मृतपत्नीकः क्रतूनाहरिष्यन् जायामुपयम्याग्नीनादध्यात् । विज्ञायते च—'तस्मादेको द्वे जाये विन्दते, तस्मादेको बह्वीर्जाया विन्दते' इति च ॥ २

मृतपतिकाया औपासने पितृमेधः ॥ ३

न ह्यस्या अपतित्वात् पुनरग्न्याधेयं विद्यते । विज्ञायते च—'तस्मान्नैका द्वौ पती विन्दते' इति ॥ ४

'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्यविशेषाज्जायापत्योराहिताग्न्योरित्येवेदमुक्तं भवति ॥ ५

तयोर्यः पूर्वो म्रियेत तस्याग्निस्त्रेतया यज्ञपात्रैश्च पितृमेधः, यः पश्चात्तस्यौपासनेन ॥ ६

सह प्रमीतयोस्सहैकः पितृमेधः ॥ ७

औपासनस्योल्मुकार्थत्वादौपासनेऽविद्यमाने निर्मन्थ्येन पितृमेधः ॥ ८

'औपासनेनानाहिताग्निम्' इत्यविशेषाज्जायापत्योरनाहिताग्न्योरित्येवेदमुक्तं भवति ॥ ९

तयोर्यः पूर्वो म्रियेत तस्यौपासनेन पितृमेधः, यः पश्चा

त्तस्य निर्मन्थ्येन ॥ १०

उत्तपनीयमेके समामनन्ति ॥ ११

निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्येकेषाम् ॥ १२

मृतपत्नीकस्याग्निभिर्जायायां दग्धायामौपासने का प्रतिपत्तिरिति ॥ १३

क्रतूंश्चेदाहरिष्यन् स्याद्ब्रह्मौदनिकमेनं कुर्यात् ॥ १४

वनं चेदातिष्ठेदौपासनमेवोपास्यन् स्यात् ॥ १५

आत्मानं चेद्गुअयादात्मन्येनं समारोपयेत् ॥ १६

अथ चेत्संन्यसेत् नैनमाद्रियेत ॥ १७

यथो एतत् ग्रहानेष्यन्नुपकल्पयत इति स्वान् स्वान् गृहस्थधर्मान् प्रतिपत्स्यन्निसेत्वेदमुक्तं भवति ॥ १८

नाशुचिः काम्यं तप आतिष्ठेन्न यजेन्न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपौर्णमासाभ्यां न दद्यात् काममृत्विग्भ्यो दद्यात् ॥ १९

कथमु खलु प्राचीनावीतिना पितृमेधः कर्तव्योऽन्यत्र यज्ञोपवीतिनेति । प्राचीनावीतिनेत्येव ब्रूयात् । विज्ञायते च—'पितृणां वा एष मेधो देवानां वा अन्ये मेधाः' इति ॥ २०

निवीतिनस्त्वेवैनं वहेयुश्चितायां चादध्युः ॥ २१

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने चतुर्थः खण्डः

अथ यदि नष्टाग्निरपहृताग्निर्विधुराग्निर्विच्छिन्नाग्निरुत्सृष्टाग्निस्समारूढाग्निर्वा यजमानः प्रेयाद्यद्यस्य पुत्रो वाऽन्तेवासी वाऽलं कर्मणस्स्यात् प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यस्यायतनेऽरणी निधाय प्रेतस्य दक्षिणं बाहुमन्वारभ्य मन्थति—'येऽस्याग्नयो जुहुतो मांसकामास्सङ्कल्पयन्ते यजमानं जायन्तु ते हविषे स्वादिताय स्वर्गलोकमिमं प्रेतं नयन्तु' इति ॥ १

मथित्वाऽग्नीन्विहृत्य तूष्णीं विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय द्वादशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तेन मनसाऽनुद्रुत्याहवनीये जुहोति ॥ २

एतेनैव गार्हपत्ये जुहोति ॥ ३

तूष्णीमन्वाहार्यपचने हुत्वा तदूर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ४

अथ यद्यात्मनि समारूढेष्वग्निष्वरण्योर्वा यजमानो म्रियेत यद्यस्य पुत्रोऽन्तेवासी वाऽलं कर्मणस्स्यात् प्राचीनावीतं कृत्वोद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यायतने लौकिकमग्निमुपसमाधाय प्रेतस्य दक्षिणं बाहुमन्वारभ्य जपति—'उपावरोह जातवेद इमं तं स्वर्गाय लोकाय नय प्रजानन्। आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतीश्चास्य जुषस्व सर्वाः' इति ॥

अपि वाऽरण्योरुपावरोह्य मथित्वा तूष्णीं विहारं कल्पयित्वा गार्हपत्ये जुहोति—'हिरण्यगर्भस्समवर्तताग्रे' इत्या-

न्तादनुवाकस्य प्रत्यृचं हुत्वा पूर्णाहुतिं हुत्वाऽत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ६

अथ यदि समारूढस्यान्मथ्यमानेन्वारभ्यैतामृचं जपति। प्रसिद्धमत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते ॥ ७

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
पञ्चमः खण्डः.

---

अथो एतत्परोक्षप्रेतस्य यजमानस्यास्थान्याहृत्य संस्कुर्यादिति कथमत्राहरणं विद्यत इति ॥ १

शिरस्तः प्रथमं गृहीत्वाऽथोरस्तोऽथो जठरतोऽथोरुबाहुभ्यामथ पत्त इति त्रयास्त्रिंशतमस्थानि गृह्णातीति विज्ञायते—त्रयास्त्रिंशत्पुरुषः' इति ॥ २

अथैतान्यस्थान्यद्भिः प्रक्षाल्य कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नस्थानि सम्भरति—'इन्द्रो दधीचो अस्थभिः' इत्येतेनानुवाकेन ॥ ३

अत्र तयादेवतं करोति—'तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति ॥ ४

अथ सूददोहसं करोति—'ता अस्य सूददोहसस्सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वारोचने दिवः' इति ॥ ५

दीर्घवंशे विग्रथ्याक्षारलवणाशिनो मृण्मयभोजना आहरन्ति ॥ ६

तानि ग्राममर्यादायां निधायाग्नीनुपनिर्हृत्य पैतृमेधिकं कर्म प्रतिपद्यते ॥ ७

नासति यजमाने ग्राममर्यादामतिहरेयुः ॥ ८

यद्यतिहरेयुरग्नयो लौकिकाः सम्पद्येरन् । विज्ञायते—'प्रवसन् वसति यजमानोऽग्निभ्यः परिदाय गृहानोति तस्मात् ग्राममर्यादां नाति व्रजन्ति' इति ॥ ९

अथ यदि परोक्षप्रेतस्य यजमानस्य दिगेव प्रज्ञायते तां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्राहमाहूय पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ १०

अथ यदि परोक्षप्रेतस्य यजमानस्य दिगपि न प्रज्ञायते इमां दिशं विहारं कल्पयित्वा 'असावेहि' इति नामग्रहमाहूय पर्णत्सरूणां कृष्णाजिने पुरुषाकृतिं कृत्वा तेषूपरि पात्राणि चित्वा कुशतरुणकैः प्रतिच्छाद्य प्रसिद्धमुपोषेयुरिति ॥ ११

अथ यदि यजमाने म्रियमाणे पत्न्यालम्भुका * स्यात् कथं तत्र प्रायश्चित्तं ?। द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गामन-

* ख. पत्न्यनालम्भुका.

स्वतीमहाव्याहृतीर्हुत्वा 'तद्यमो राजा' इति द्वाभ्यां पूर्णाहुतिं हुत्वा यद्यर्थिनो विन्देरंस्तेभ्यो धेनुं दद्यादिति ॥ १२

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
षष्ठः खण्डः.

---

यद्येवं कृतेऽग्निभिर्यजमानः पुनरागच्छेत् कथं तत्र कुर्यादिति ॥ १

यज्ञियात् काष्ठादग्निं मथित्वाऽग्निमुपसमाधाय सम्परिस्तर्याग्निमुखात् कृत्वा पक्वाज्जुहोति—'हिरण्यगर्भस्समवर्तताग्रे' इति द्वाभ्याम् ॥ २

अथाज्याहुतीरुपजुहोति—'सहस्रशीर्षा' इत्येतेनानुवाकेन प्रत्यृचम् ॥ ३

स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ ४

अपरेणाग्निं सौवर्णेन पात्रेण घटेन वा मृण्मयेन कृष्णाजिनेन वा दृतीभूतेन घृतेनाद्भिः पूरयित्वा जीवपितुश्चेत् पिताऽभिमन्त्रयते—'विष्णुर्योनिं कल्पयतु' इति ॥ ५

अथैनं प्रवेशयाति—'त्वां पूषंच्छिवतमामेरयस्व' इति ॥ ६

स गर्भो भूत्वा कृष्णाजिनदृतावेतां रात्रीं वसाति ॥ ७

व्युष्टायां पुंसवनप्रभृत्या जातकर्मणः कारयित्वा जघनार्धादात्मानमपकृष्य जायेत ॥ ८

जातस्य जातकर्मप्रभृति संस्कारान् कारयित्वा द्वादशरात्रमेतत् व्रतं चरेत् ॥ ९

तथैव भार्ययाऽग्नीनाधाय व्रात्यैनैन्द्राग्नेन पशुना यजेत॥

गिरिं गत्वाऽग्नये कामायेष्टिं निर्वपेदायुष्मतीं शतकृष्णलाम् ॥ ११

दिशामवेष्ट्या वा यजेत ॥ १२

अत ऊर्ध्वमीप्सितैः यज्ञक्रतुभिर्यजेतेति विज्ञायते ॥१३

हिरण्यगर्भस्सम्भूतो ब्राह्मणश्चीर्णानिर्णयः * ।
प्रत्युत्थानं न कस्यापि कुर्याद्देवसमस्तु सः ॥

इति विज्ञायते ॥ १४

तस्मात्प्रोषिते यजमाने चतुर्विंशतिवर्षाणि परिपाल्याग्निहोत्रं संस्कुर्याद्यद्यश्रुतं स्यादिति ॥ १५

अथ यद्याग्रयणेष्टिपशुचातुर्मास्याध्वराणामसमाप्तानां व्रतान्तराळे प्रमीयेत यद्यस्य पुत्रोऽन्तेवासी वा शेषांश्चैकतन्त्रे समाप्नुयात् ॥ १६

पश्वलाभे तत्तद्देवत्यं पुरोडाशमामिक्षां वा यजेत ॥ १७

अथ वै भवति 'तमसो वा एष तमः प्रविशति य आहिताग्निमन्यैरग्निभिस्संस्कुर्यात्' इति ॥ १८

अथाप्युदाहरन्ति—'शरीरदायादा ह वाऽग्नयो भवन्ति' इति । मरणे श्रेयोऽवाप्तिः । 'य एवं विद्वानुदगयने प्रमीयते सौर्येण पथा स्वर्गं लोकमेत्यथ यो दक्षिणे प्रमीयते चान्द्रम-

---

* ख, छिन्ननिर्णयः

सेन पथा पितृलोकमेति' इति विज्ञायते ॥ १९

'ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्' इत्याहुतिभिष्षड्भिरेवैनं पूर्वपक्ष उदगयन आहरोदिति ॥ २०

'उदगयन आपूर्यमाणपक्षे दिवा कृत्वन्ते श्रेयो मरणम्' इत्युपदिशन्ति ॥ २१

अन्येषु वा नियमीभूतेषु सत्रेषु दीक्षितप्रमीतप्रायश्चित्तवदेकाहेऽहीने च कुर्यादिति कुर्यादिति ॥ २२

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने

सप्तमः खण्डः.

---

अथ द्विजातीनां पापकर्मणामज्ञातमृतनां मुख्यमेव शरीरसंस्कारं कुर्वन्ति । तदानीमेव प्रायाश्चित्तं कुर्वन्ति ॥ १

सर्पदष्टमृतानां 'नमो अस्तु सर्पेभ्यः' इति तिस्र आहुतीर्जुहुयात् ॥ २

जले मृतानां 'इमं मे वरुण, तत्त्वा यामि' इति द्वाभ्याम् ॥ ३

समुद्रे मृतानां 'समुद्राय वयुनाय' इत्यृचा ॥ ४

पश्वादिभ्यो मृतानां 'आ गावः, इन्द्रो यज्वने' इति द्वाभ्याम् ॥ ५

अशनिपातमृतानां 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् । 'मूर्धानं दिवः' इत्येतया वा ॥ ६

अथ सूतिकाया उदक्यायाः आशौचिनां वा मरणे आशौचकालेऽतीते वा तावत्कालं शरीररक्षणाशक्तौ मृद्भस्ममिश्रितेन पञ्चगव्येन गोमूत्रेण वा कुशैः प्रोक्षति । सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति ॥

शतरुद्रियेण 'अग्निर्मूर्धा' इत्यनुवाकेन चेत्येके ॥ ८

अथान्येन वाससाऽऽच्छाद्य विधिना दहेत् ॥ ९

अथानाहिताग्नेरौपासनं सायमुपक्रमं प्रातरपवर्गमित्यादि समानं भवति ॥ १०

अथ यद्यार्तस्स्यादौपासनं विच्छिद्येत द्वादशाहादूर्ध्वीमार्ष्टिं वा कर्तुमशक्तः आज्यं संस्कृत्य चतुर्गृहीतेनाज्येन यावदाम्नातमाज्याहुतीर्जुहोति ॥ ११

इति बोधायनीयपितृमेधसूत्रे

अष्टमः खण्डः

---

* अथैकोद्दिष्टेष्वादित एव प्राचीनावीतं कृत्वा दक्षिणाप्रत्यक्प्रवणं स्थण्डिलं कृत्वा सकृदुल्लिख्याद्भिरभ्युक्ष्याग्निं प्रतिष्ठाप्य परिस्तृणाति—पुरस्ताद्दक्षिणाग्रानुत्तरतः प्रागग्रान् पश्चाद्दक्षिणाग्रान् दक्षिणतः प्रागग्रानुत्तरानुत्तरान् दक्षिणानधरान् ॥ १

*एतन्नवमखण्डमारभ्य चत्वारः खण्डाः क. पुस्तकमात्रे वर्तन्ते.

दक्षिणेनाग्निं दक्षिणाग्रान दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि संसादयति—अथाज्यस्थालीं स्रुवमौदुम्बरं दर्वीं तिलोदकपात्रं प्रोक्षणीपात्रमुद्धरणीयं पात्रमिति ॥ २

तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य सिद्धमोदनं सविशेषमानीय दाक्षिणतो निधाय नात्रापूपमथाज्यं निर्वपति । ३

दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रित्याभिद्योतनेनाभिद्योत्य दर्भाग्रं प्रत्यस्य पुनरभिद्योत्य सिद्धमोदनं सहाप सलैः पर्यग्निकृत्वा स्रुवं च दर्वीं च सम्मृज्य सविशेषमोदनं प्रतिष्ठितमभिधारयति ॥ ४

पवित्रं कृत्वा तिलोदकपात्रे निधायाप आनयन्नाह—

‘आम आगच्छतु प्रेतो देवयानान् समुद्रान् सलिलान् सवर्णानस्मिन् यज्ञे सर्वकामं लभतेऽक्षीयमाणामुपदुह्यतामिमां प्रेताय वो गृह्णामि’ इति पुंसाम् । ‘प्रेता देवयानान्...प्रेतायै वो गृह्णामि’ इति स्त्रीणाम् ॥ ५

अपोद्धृत्य पवित्रं तिलानावपति—‘तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्नयेहि प्रेतामिमान् लोकान् प्रीणयाहि नः’ इति पुंसाम् । ‘प्रेताम्’ इति स्त्रीणाम् ॥ ६

अथ तिरः पवित्रं मध्वानयति—‘मधु वाता ऋतायते’ इति तिसृभिरनुच्छन्दसम् ॥ ७

अथैनत्सर्वाभिरङ्गुलीभिस्समुदायुत्याभिमृशति—'सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादमृतमसि मृत्योर्मा पाहि दिद्योन्मा पाहि' इति ॥ ८

तस्मिंश्चित्किञ्चिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसङ्गृह्येमां दिशं निरस्यति—'अवेष्टा दन्दशूका निरस्तं नमुचेश्शिरः' इति ॥ ९

अथाप उपस्पृश्य पुनरेवाभिमृशति—'शं नो देवीर भिष्टये । आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः' इति ॥

अथैनद्गन्धपुष्पैरभ्यर्च्य दक्षिणाग्रैर्दर्भैः प्रतिच्छाद्य भोजनस्थानेष्वासनेषु च तिलान् सिकताश्च संप्रकिरति—'अपहता असुरा रक्षाꣳसि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रास्य गतं मनः' इति पुंसाम् । 'यत्रास्या गतं मनः' इति स्त्रीणाम् ॥ ११

अथैनदद्भिरवोक्षति—'उदीतामवर उत्पर उन्मध्यमः प्रेतस्सोम्यः । असुं य इयायावृक उतज्ञस्स नोऽवतु प्रेतो हवेषु' इति पुंसाम् 'उदीतामवरोत्परोन्मध्यमा प्रेता सोम्या । असुं येयायावृकर्तज्ञा सा नोऽवतु प्रेता हवेषु' इति स्त्रीणाम् ॥

अत प्रेतमावाहयति—'आयाहि प्रेत सोम्य गम्भीरैः पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददद्रयिं च दीर्घायुत्वं च शतशारदं च' इति पुंसाम् । 'आयाहि प्रेते सोम्ये गम्भीरैः

पथिभिः पूर्व्यैः । प्रजामस्मभ्यं ददती रयिं च दीर्घायुत्वं च शतशारदं च' इति स्त्रीणाम् ॥ १३

अथ ब्राह्मणानाहूय सुप्रक्षाळितपाणिपादानप आचमय्य सदर्भोपक्लृप्तेष्वासनेषूपवेश्य तेषां सपवित्रेषु पाणिषु तिलोदकं ददाति—'अमुष्मै तृप्तिरस्तु' इति 'अस्तु तृप्तिः' इतीतरेषां प्रतिवचनम् ॥ १४

अथैनान् वस्त्रगन्धपुष्पमाल्यैस्संपूज्य शुद्धोदकं दत्वा पूर्ववत्तिलोदकम् ॥ १५

अथैनान् पृच्छति—'करिष्यामि' इति । 'कुरुष्व' इतीतरे प्रत्याहुः ॥ १६

अथाभ्यनुज्ञातो दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृत्समवदायाभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात्—'प्रेतायामुष्मै यमाय च स्वाहा' इति । तद्धुतमहुतं च भवति ॥ १७

अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य दक्षिणाग्रेषु दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्याभिमृशति—'पृथिवी ते पात्रं द्यौर पिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्रामुष्मिन् लोके' इति ॥ १८

अथैतानि ब्राह्मणेभ्य उपनिक्षिप्य ब्राह्मणस्याङ्गुष्ठेनानखेनानुदिशति—'अमुष्मा उपतिष्ठतु' इति । भुञ्जानान् समी-

क्षते—'प्राणे निविष्टोऽमृतं जुहोमि' इति पञ्च 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यात्मानम्। न चात ऊर्ध्वं निरीक्षते ॥

तृप्तानप आचमयच्य 'स्वदितमुच्यताम्' इति 'अस्तु स्वदितम्' इतीतरेषां प्रतिवचनम् ॥ २०

पूर्ववत्तिलोदकं दत्वाऽऽशयेष्वन्नशेषैः पिण्डान् ददाति-'अमुष्मा उपतिष्ठतु' इति सक्षाळनेनापसव्यं 'तृप्यस्व' इति परिषिच्य दक्षिणां दत्वाऽक्षय्यं वाचयित्वा यज्ञोपववीत्यभिवादनं कृत्वा उत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्यान्नशेषान्निवेदयते। यथाब्रूयुस्तथा कुर्यात्। तृतीये पक्षे द्वितीयम्। सन्ततमेकैकेनैकादश मासान्नयन्ति। न द्वादशमासमभ्यारोहन्ति ॥ २१

इति बोधायनपितृमेधे द्वितीयप्रश्ने
नवमः खण्डः.

---

अथैकोद्दिष्टे प्राप्ते विप्राभावे द्रव्याभावे वा कथमत्र कुर्यादिति !। द्वात्रिंशत्कबळेन सघृतपायसेनाग्नावेव कुर्यादिति विज्ञायते ॥ १

अथ कर्ता स्नात्वा शुचौ देशे ब्राह्मणानाहूयानुज्ञाप्य पूर्ववत्प्रेतावाहनान्तं कृत्वाऽग्निं प्रेताकारं ध्यात्वाऽऽसनं पाद्यमाचमनीयं तिलोदकं चाग्निसमीपे दक्षिणतो दत्वाऽथ तिलग-

न्धपुष्पमाल्यैरग्निमभ्यर्च्य तथा तिलोदकम् । अथ ब्राह्मणै-रनुज्ञातोऽग्निं परिषिच्य व्याहृतीभिर्हुत्वा प्रेताहुतिं जुहुयात् । तस्मिन् हविषि मुष्टिप्रमाणं घृततिलमिश्रमुपस्तीर्णाभिघारितं द्वात्रिंशत्कवळं दर्व्या जुहोति—'यमाय सोमं, यमाय घृत-वत्' इति द्वाभ्याम् ॥ २

अथ दर्वीं प्रहृत्याभिहुत्य तिलोदकं चरुशेषेण पिण्डं च दत्वा तिलोदकपात्रमानीय 'तृप्तिरस्तु' इति परिषिच्या-पसव्यमथ ब्रह्मसमूहमग्निं च प्रदक्षिणीकृत्य यथाशक्ति दक्षिणां दत्वा 'प्रेततृप्तिरस्तु' इति वाचयित्वाऽऽशिषो वाचयित्वाऽथ व्यहृतीभिर्हुत्वा दर्भान् प्रहृत्याग्निं परिषिच्य पिण्डमप्सु प्रक्षिप्य स्नात्वा पुण्याहं वाचयित्वा प्रोक्षति ॥ ३

अथाप्युदाहरन्ति—

आद्यश्राद्धे तु संप्राप्ते विप्राभावे कथं भवेत् ।
द्रव्याभावे तु कुर्वीत चरुणा पायसेन तु ॥ ४

अग्नौ हुत्वा यमायेति द्वाभ्यां द्वात्रिंशदाहुतीः ।
प्रेतस्तृप्तिमवाप्नोति पुण्यलोके महीयते । इति ॥ ५

अथ नवश्राद्धं विच्छिद्येतैतस्मिन्नाह्नि कुर्यात् अथाप्यु-दाहरन्ति—चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥ ६

एकोद्दिष्टे नवश्राद्धे यदि विघ्नः प्रवर्तते ।
तिथिवारादिभिः कुर्यात्प्राप्तमेकादशेऽहनि ॥ इति ॥ ७

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
दशमः खण्डः.

---

'संवत्सरे सपिण्डीकरणं साग्नीकरणम्' इति तत्पुरस्ताद्व्याख्यातमेतावदेव नाना ॥ १

द्वे स्थण्डिले करोति दक्षिणतश्चोत्तरतश्च दक्षिणतो मासिश्राद्धवदुत्तरत एकोद्दिष्टवत् । दक्षिणतोऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा विश्वेभ्यो देवेभ्यो ब्राह्मणावुपवेश्य गन्धपुष्पधूपदीपैरभ्यर्च्य वैश्वदेवेन चरुणाऽनुदिश्य 'विश्वेभ्यो देवेभ्यस्स्वाहा' इत्यथ प्राचीनावीतं कृत्वा पूर्ववत्तिलोदकं संयुज्याथोत्तरत उल्लेखनप्रभृत्या परिषेचनात्कृत्वा पवित्रं कृत्वा तिलोदकपात्रे निधायाप आनयन्नाह—'आम आगच्छतु प्रेतो देवयानान्समुद्रान्सलिलान्सवर्णान् । अस्मिन् यज्ञे सर्वकामं लभतेऽक्षीयमाणमुपदुह्यतामिमाम् । प्रेताय वो गृह्णामि' इति पुंसाम् । 'प्रेता देवयानान....प्रेतायै वो गृह्णामि' इति स्त्रीणाम् ॥ २

अपोद्धृत्य पवित्रं तिलानावपति—'तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवाद्भिः प्रत्नस्स्वधयेहि प्रेत·

मिमान् लोकान् प्रीणयाहि नः स्वधा नमः' इति पुंसाम्। 'प्रेताम्' इति स्त्रीणाम्। स्वधाशब्दो नमस्कारशब्दो नमस्कारा-भिधेयत्वात् ॥ ३

मध्वानयनप्रभृति समानमा प्रेतावाहनात् ॥ ४

दक्षिणस्य पितृणामावाहनप्रभृति तिलोदकदानान्तं कृत्वाऽथोत्तरस्य 'अमुष्मै स्वधानमः' इति तथाऽलङ्कृत्य ददाति। 'अग्नौ करिष्यामि' इति 'कुरुष्व' इतीतरे प्रत्याहुः ॥ ५

अथाभ्यनुज्ञातः परिधानप्रभृत्याऽन्नाभिमर्शनात्कृत्वाऽथोत्तरस्य परिषेकं कृत्वा व्याहृतीभिर्हुत्वा दर्व्यामुपस्तीर्य सर्वस्मात्सकृत्सकृदवदायाभिघार्य दक्षिणतो भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुयात्—'प्रेतायामुष्मै यमाय च स्वधा नमस्स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्स्वाहा' इति दक्षिणार्धपूर्वार्धे ॥ ६

अथौदनं पात्रेपूद्धृत्य दर्भेषु सादयित्वा दर्भैः प्रतिच्छाद्याभिमृशति—'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य त्वा विद्यावतः प्राणापानयोर्जुहोम्यक्षितमसि मा प्रेतस्य क्षेष्ठा अमुत्रामुष्मिन् लोके' इत्यभिमृश्य निधायाथ दक्षिणस्य ब्राह्मणानामङ्गुष्ठेनानखेनानुदिशति—'अमुष्मै स्वधानमोऽमुष्मै स्वधा नमः' इति ॥ ७

अथोत्तरस्य तन्मन्त्रेणानुमन्त्रणं परिषेचनादि तत्राभिश्रावणान्तं कृत्वा तृप्तानप आचमय्याशयेष्वन्नशेषान् संप्रकीर्य

संक्षाळनेनावकीर्य दक्षिणां दत्त्वाऽक्षय्यं वाचयित्वा यज्ञोपवीत्यभिवादनं कृत्वाऽथोत्तरस्याश्रयेषूपलिप्य दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैः ददाति—'अमुष्मा उपातिष्ठतु' इति संक्षाळनेनापसव्यं 'तृष्यस्व' इति परिषिच्य दक्षिणां दत्त्वाऽक्षय्यं वाचयित्वाऽभिवाद्य स्वधां वाचयित्वोत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्यैतेनैव यथेतमेत्याथोत्तरे व्याहृतीर्हुत्वा दर्भान् प्रहृत्य परिषिच्याथ दक्षिणे चतुर्विंशतिपिण्डान् दत्त्वा प्रेतपात्रं पितृपात्रेषु निनयेत्—मधुमतीभिः, 'संगच्छध्वम्' इति द्वाभ्याम्। प्रेतपिण्डं पितृपिण्डेषु निदध्यात्—'समानो मन्त्रस्समितिः, समानीव आकूतिः' इति द्वाभ्याम् ॥ ८

अथैनानुपतिष्ठते—'ये समानाः' 'ये सजाताः' इति द्वाभ्याम् ॥ ९

संक्षाळनप्रभृति सिद्धमत ऊर्ध्वम् ॥ १०

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्ने
एकादशः खण्डः

---

संवत्सरे सपिण्डीकरणमेकादशे मासि षष्ठे चतुर्थे द्वादशेऽह्नि वा ॥ १

पितॄणामावाहनं सव्यस्य पाणेरङ्गुष्ठोपकनिष्ठिकया चाङ्गुल्या चारभ्य पृथिवीं जपेत्। 'ये पार्थिवासः पितरो ये अन्त-

रिक्षे ये दिवि ये वा मृता बभूवुः । ते अस्मिन् यज्ञे समवयन्ताम्' इति । चत्वारि पात्राणि तिलमिश्रगन्धोदकेन पूरयित्वा एकं प्रेतस्य त्रीणि पितॄणामेकमथवाऽथ प्रेतपात्रं पितृपात्रेषु निनयेत्—मधुमतीभिः, 'सङ्गच्छध्वम्' इति द्वाभ्याम् । प्रेतपिण्डं पितृपिण्डेषु निदध्यात्—'समानो मन्त्रः, समानी व आकूतिः' इति द्वाभ्याम् ॥ २

अथैनानुपतिष्ठते—'ये समानाः, ये सजाताः' इति द्वाभ्याम् ॥ ३

पिण्डानुपस्थायैकं वा पितृपात्रं 'असौ पितृभिः पितामहैः प्रपितामहैस्सहैतत्ते तिलोदकम्' इति तिलोदकप्रदानं नेहरणमन्नप्रदाने यथार्थमूहेदास्वादनेष्वाशयेष्वेव ॥ ४

सपिण्डो व्याख्यातः ॥ ५

इति बोधयनीयपितृमेधसूत्रे द्वितीयप्रश्ने
द्वादशः खण्डः.

---

संवत्सरे सपिण्डीकरणमेकादशे । संवत्सरं सपिण्डीकरणम् । अथैकोद्दिष्टे प्राप्ते । अथैकोद्दिष्टेषु । अथ द्विजातीनाम् । यत्रैवं कृतेऽग्निभिर्यजमानः । अथ यदि परोक्षप्रेतस्य । अथ यदि नष्टाग्निः । इयं नारी । यथो एतद्वन्विर्यज्ञियं निवपनम् । अथ वै भवति । यथो एतदाहिताग्नेः ॥ १२

यथो एतदाहिताग्नेः । अथ वै भवति । यथो एतद्धाविर्यज्ञियम् । इयं नारी । अथ यदि नष्टाग्निः । अथ यदि परोक्षमेतस्य । यद्येवं कृतेऽग्निभिर्यजमानः । अथ द्विजातीनाम् । अथैकोद्दिष्टेषु । अथैकोद्दिष्टे प्राप्ते । संवत्सरे सपिण्डीकरणम् । संवत्सरे सपिण्डीकरणमेकादशे ॥ १२

इति बोधायनीयपितृमेधसूत्रे द्वितीयप्रश्नः.

---

## अथ तृतीयप्रश्नः.

अथातो द्विजातीनां दहनकल्पं व्याख्यास्यामः १

जातस्य वै मनुष्यस्य ध्रुवं मरणमिति विजानीयात्तस्माज्जाते न प्रहृष्येन्मृते च न विषीदेत् ॥ २

अकस्मादागतं भूतमकस्मादेव गच्छति ।

तस्माज्जातं मृतं चैव संपश्यन्ति सुचेतसः ॥ इति॥ ३

तस्माज्जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतः जातसंस्कारः मृतसंस्कारश्चेति । विज्ञायते—'जातसंस्कारेणेमं लोकमभिजयति मृतसंस्कारेणामुं लोकम्' ॥ ४

तस्मान्मातरं पितरमाचार्यं पत्निं पुत्रं शिष्यमन्तेवासिनं पितृव्यं मातुलं सगोत्रमसगोत्रं वा दायमुपयच्छेद्दहनसंस्कारेण संस्कुर्वन्ति ॥ ५

त एव शवभर्तारोऽन्ये समानगोत्रा वा ॥ ६

राजन्यस्य पुरोहितः सहस्रदक्षिणो ब्राह्मणः ॥ ७

वैश्यस्य सप्तगुना वा ॥ ८

अथाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ॥ ९

गृहस्थमौपासनेन ॥ १०

ब्रह्मचारिणं कपालसंतपनाग्निना ॥ ११

उत्तपनीयेनेतरान् ॥ १२

एवं स्त्रियम् ॥ १३

अथ यद्याहिताग्निर्भवति पौर्णमासेन हविषेष्ट्वा सायं हुत्वा वा प्रमीयेताथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुक्स्रुवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वोत्तरतो दक्षिणामुख उपाविश्य गार्हपत्ये जुहोति—'मृत्योराधिष्ठानाय स्वाहा' इति॥

एवमेव प्रह्वोऽन्वाहार्यपचने तिष्ठन्नाहवनीये ॥ १५

दक्षिणतस्सकृदतिवाल्य वेद्यै दक्षिणेंऽसे दक्षिणाग्रं स्रुचं निधाय प्राचीनावीतं कृत्वा दक्षिणोत्तानेन पाणिना दक्षिणतस्स्रुचं संमार्ष्टि—'पितृभ्यस्त्वा मृत्युं जिन्व' इति वा। तूष्णीं वा ॥ १६

अथाप उपस्पृश्याङ्गुल्या सकृत्प्राश्याप आचम्य निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा प्रेतस्य प्राणस्थानेषु निनीय यथायतनं* स्रुचं विमुञ्चति—'सैव ततः प्रायश्चित्तिः' इति ब्राह्मणम् ॥ १७

*यथायथं.

अथैनं मरणसंशये यजमानायतने सिकतास्संप्रकीर्य दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु दक्षिणाशिरसमेनं निपात्य दक्षिणे कर्णे जपति—'आयुषः प्राणं संतनु' इत्येतमनुवाकम् ॥ १८

'संज्ञानं विज्ञानम्' इति षोडशानुवाकानेवमुत्तरे ॥१९

अथ प्राणेषूत्क्रान्तेषु हिरण्यशकलमास्ये निधायाध्वर्यु-रुपकल्पयते—सर्वौषधं चोदकुम्भं चाहतं च वासस्समूलं बर्हिर्हिरण्यं च हिरण्यशकलांश्च गां रोहिणीं परशुमश्मानं चोर्णासूत्रमौदुम्बरं तल्पमौदुम्बरीं शाखां दधिमधुघृतमिति तिलतण्डुलांश्च याज्ञिकानि च काष्ठानि च स्पन्द्यां शङ्कूनित्येतेऽस्य सम्भारा उपक्लृप्ता भवन्ति ॥ २०

अथैषा पत्नी केशान् विस्रस्यार्द्रेरेनं स्नापयति भ्राता पुत्रो वा तूष्णीम् ॥ २१

इति बोधायनीयपितृमेधसूत्रे त्रितीयप्रश्ने
प्रथमः खण्डः.

---

अथाध्वर्युः प्राचीनावीती सर्वौषधेनोदकुम्भं पूरयित्वा तेन दशहोत्रा पत्तोऽग्रं स्नापयति—'चित्तिस्स्रुक्' इत्येतेनानुवाकेन ॥ १

अथ ग्राम्येणालङ्कारेणालंकृत्य शिरस्तो नळदमालामाबद्ध्यौदुम्बरं तल्पं समारोप्याङ्गुष्ठबन्धं करोति ॥ २

अथैनमहतेनोदीचीनदशेन वाससा समुखं प्रच्छाद्य भर्तारो ग्रामादुपनिष्क्रम्याग्निभिस्सह यज्ञायुधानि च संभारांश्च तस्याग्रेण संभारान् दक्षिणतः पात्राणि पश्चादग्निमिति निधायापसलैः परिस्तीर्य तं बान्धवास्सिग्वातेनोपवीजयन्तास्त्रिरपसव्यं परियन्ति—'वातास्ते वान्तु पथि पुण्यगन्धाः मनश्शुभा गात्रशुभा अनुलोमाः । त्वचस्सुखा मांससुखा अस्थिसौख्या वहन्तु त्वा मरुतस्सुकृतां यत्र लोकाः' इति ॥ ३

यथेतं त्रिः पुनः परियन्ति ॥ ४

एवं पथि चितायाम् ॥ ५

चितायामित्येके ॥ ६

श्मशानं नीत्वा दहनं जोषयते ॥ ७

तस्य दक्षिणाप्रत्यक्प्रवणमनिरिणमभङ्गुरमसुषिरमवल्मीकमजागर्तिबहुलौषधि गोचर्ममात्रं स्थण्डिलं भवति ब्राह्मणस्य धनुष्कोटिमात्रं राजन्यस्य रथचक्रमात्रं वैश्यस्य विमाय शङ्कुभिः परिणिहत्य समन्तं स्पन्द्यया परितनोति ॥ ८

अथैनं मध्ये शकलेनोद्धत्यावोक्ष्य औदुम्बर्या शाखया पलाशशाखया शमीशाखया वा संमार्ष्टि—'अपेत वीत वि च सर्पत' इति । दक्षिणतश्शाखां निरस्याद्भिरवोक्षति—'अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै' इति । हिरण्यशकलमवदधाति—'अपसर्पत प्रेता ये के चेह पूर्वजास्स्वस्ति नः कुरुत माऽश्रुपातः पुनरागमिष्यामहे' इति ॥ ९

स्फ्येन वा परशुना वा दक्षिणापवर्गास्तिस्रः कर्षूः खात्वा तिलतण्डुलानां मुष्टिं पूरयित्वा—'यमाय दहनपतये पितृभ्यस्स्वधा नमः' इति प्रथमायां निवपति। 'कालाय दहनपतये पितृभ्यः स्वधा नमः' इति द्वितीयायां 'मृत्यवे दहनपतये पितृभ्यस्स्वधानमः' इति तृतीयायाम् ॥ १०

प्रथमेनैव मन्त्रेण तिसृषु निवपतीत्येके ॥ ११

अथावशिष्टांस्तिलतण्डुलान् सर्वतस्त्रिरपसव्यं*प्रकिराति ॥

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
द्वितीयः खण्डः.

---

'यथा पिता पुत्रं पश्यति सखा वा सखिमागनम्। एवामिमं पूर्वसंक्लिन्नाः† प्रेताः पश्यत माऽन्यथा' इति दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु दक्षिणाग्रैर्याज्ञिकैः काष्ठैश्चितां कल्पयित्वा चितायां दक्षिणाग्रेषु दर्भेषु कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तृणाति ॥ १

तस्मिन् दक्षिणाशिरसमुत्तानं प्रेतं निधायापसलैः परिस्तीर्य चितामूर्णासूत्रेणापसलैः परिवेष्टयति ॥ २

तमग्निमपसलैः परिस्तृणाति ॥ ३

दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वेकैकशो न्यञ्चि पात्राणि सादयित्वा तूष्णीं संस्कृताभिरद्भिरु

---

* ख. ग्रि: प्रसव्यं. † संक्लिन्नं.

त्तानानि पात्राणि कृत्वा प्रेतं पात्राणि दारुचितौ च प्रो क्ष्याज्यं संस्कृत्य स्रुक्स्रुवं निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा व्याहृतीर्जुहोति ॥ ४

अथास्य सप्तप्राणायतनेषु सप्तहिरण्यशकलान् प्रत्यस्य- त्यास्ये नासिकयोरक्ष्णोः कर्णयोरिति ॥ ५

अलाभे आज्यबिन्दून्वा ॥ ६

मुखे प्रथममाज्यमानीय दधि मधु घृतमिति तिलत- ण्डुलांश्च समुदायुत्यास्ये निवपति ॥ ७

अथ दशहोतारमेवाग्रे नासिकयोर्द्विर्जपेत् ॥ ८

'आसीत्' इति सर्वेषु होतृपदेष्वनुषजत्यन्यत्र षड्ढोतृ- पदेभ्यः । 'आस्ताम्' इति द्वित्ववाचिषु ॥ ९

चतुर्होतारं मुखे । अक्षिकटकयोर्द्विः पञ्चहोतारम् । क- र्णयोर्द्विष ोतारम् । कीकसासु द्विस्सप्तहोतारमिति ॥ १०

अथ स्रुक्षु ग्रहान् गृह्णाति—तूष्णीं चतुर्जुह्वां घृतं चतुर एव दध्युपभृति ध्रुवायां मध्वानीय सकृद्दधि च द्विर्घृतं च- तुस्सम्पादयति चतुर एव पयोऽग्निहोत्रहवण्याम् । अपि वाऽऽज्यमेव सर्वासु ॥ ११

अत्र पात्राण्युपचिनोति—तस्य दक्षिणहस्ते स्फ्यं जुहूं च सादयति सव्य उपभृतं पृषदाज्यग्रहणीं चोरसि ध्रुवाम रणी च मुखेऽग्निहोत्रहवणीमेरकां च नासिकयोस्स्रुवावाग्निहो-

त्रिकं पैतृयज्ञिकं चाक्ष्णोर्हिरण्यशकलावाज्यस्रुवावाश्विनकपाले च कर्णयोः प्राशित्रहरणं भित्त्वोर्वोरुलूखलमुसले दत्सु ग्राव्णो यदि ग्रावाणो भवन्ति शिरसि कपालान्युपबर्हणं च ललाट एककपालमुदरे पिष्टोध्द्वपनीं* नाभ्यामाज्यस्थालीं जघनेन दारुपात्रीं पार्श्वयोश्शूर्पं छित्वा वंक्षणयोस्सान्नाय्यकुम्भ्यौ यदि सन्नयन् भवत्यण्डयोर्दृषदुपले शिश्ने वृषारवं शम्यां च पृष्ठयोरग्निहोत्रस्थालीमन्वाहार्यस्थालीं च पत्त उपावहरणीयं† कूर्चं शिरस्त उपसादनीयं वेदं शिखायामिडापात्रं च प्रणीताप्रणयनं च ॥ १२

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
तृतीयः खण्डः.

---

'इममग्ने चमसम्' इति चमसमन्त्रशिष्टानि पत्नीसन्नहनानि स्रुचोऽथेतराणि सर्वाणि सन्नह्य चान्तरेण सक्थिनी निवपति ॥ १

तं बान्धवास्स्रिग्वातेनोपवीजयन्ति ॥ २

अथ पत्न्युदकुम्भमादाय शीर्षन्नधिनिधाय त्रिरपसलैः परिषिञ्चति ॥ ३

तमश्मना परशुना वा किञ्चिदधस्तात् प्रहरति । तां धारामनुमन्त्रयते—'इमा आपो मधुमत्योऽस्मिंस्ते लोक उपदुह्यन्ताम्' इति ॥ ४

---

* ख. पिष्टसंवपनीं. † उपबर्हणीयां.

द्वितीयं परिगतायां प्रहरति । तां धारामनुमन्त्रयते— 'इमा धारा मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्ताम्' इति ॥ ५

तृतीयं परिगतायां प्रहरति । तां धारामनुमन्त्रयते— 'इमा आपो मधुमत्यस्स्वर्गे ते लोके उपदुह्यन्ताम्' इति ॥ ६

अथाध्वर्युर्वा कुम्भं भिनत्ति—'यदि पुरस्तात्पतति पापीयान् भवति यदि पश्चात्पतति वसीयान् भवति' इति ब्राह्मणम् ॥ ७

अत्रैवोपसीदति आर्द्रानोषधिवनस्पतीनारभ्योपोत्थाय कपालशेषा अपः प्रेतस्य प्राणस्थानेषु निनयति—'दिवि जाताः' इति ॥ ८

गां पश्यति । ब्राह्मणान् पश्यति । हिरण्यमालभते । अत्र गुरवे वरं ददाति ॥ ९

अथैनमहतेनोदीचीनदशेन वाससा कृष्णाजिनेन वा दक्षिणाग्रीवेणोत्तरलोम्ना प्रोर्णोति ॥ १०

अङ्गुष्ठबन्धं विस्रस्याथाग्नीनादीपयति—'भूः पृथिवीं गच्छतु' इति वायव्यां गार्हपत्यं 'भुवोऽन्तारिक्षं गच्छतु' इति नैरृत्यामन्वाहार्यपचनं 'सुवर्दिवं गच्छतु' इत्यैन्द्र्या। *

* इत्याग्नेय्या.

माहवनीयं पुरस्तात् सभ्यावसथ्यौ तूष्णीं वायव्यमेवोत्तरेष्वग्निषु ॥ ११

अथ संभारैश्च पत्नीभिश्चोपोषेत् ॥ १२

ग्रहैः ऋतुमुखीयेन 'ब्राह्मण एकहोता' इति चोपस्थानम् ॥ १३

सुसमिद्धेष्वग्निषु तं घर्ममनुमन्त्रयते—'यं घर्मो अग्निमभिजिहर्ति होमान् यां गतिं यान्ति युधि युद्धशूरास्सुगतिनः अग्निहोत्रानिष्ठास्तनुत्यजो मोक्षविदो मनीषिणो विधूतपापा विरजा विशोकास्तान् लोकान् गच्छ सुगतिं नाकपृष्ठं स्वधा नमः' इति ॥ १४

यद्यु वाऽनाहिताग्निर्भवति तं घर्ममनुमन्त्रयते—'यं घर्मो अग्निमभिजिहर्ति होमान् यां गतिं यान्ति वै युधि युद्धशूरास्तनुत्यजो मोक्षविदो मनीषिणो विधूतपापा विरजा विशोकास्तान् लोकान् सुगतिं नाकपृष्ठं स्वधा नमः' इति ॥

अथाप्रतीक्षास्तीर्थमायान्ति । तान् गोत्रमैथुनो राजपुरुषो वा वारयति पर्णशाखायामवतरतेति । 'न पुनःपुनरागमिष्यामहे' इत्युक्त्वा केशानोप्यातुरव्यञ्जनानि कुर्वीरन् । पांसूनोप्यैकैकवाससो दक्षिणामुखास्सकृदुन्मज्जयोत्तीर्योपविशन्ति ॥ १६

बद्धशिखा यज्ञोपवीतिनोऽप आचम्य प्राचीनावीतं कृत्वा दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु दूर्वाञ्जलिनोदकमा-

दाय सव्यं जानुं निपात्य दक्षिणामुखास्तिलमिश्रा अपस्तं प्रति 'असावेतत्त उदकम्' इति ॥ १७

एवं द्वितीयं तृतीयं च कृत्वा स्नात्वाऽप आचम्य 'सं त्वा सिञ्चामि यजुषा' इति शान्तिं कृत्वा ज्योतिष्मत्याऽऽदित्यमुपातिष्ठते—'उद्वयं तमसस्परि' इति ॥ १८

अथाप्रतीक्षा कनिष्ठप्रथमा ग्राममायान्ति ॥ १९

गृहद्वारे निम्बपत्रं प्राश्याप आचम्य गोशकृत्सुवर्णापोऽग्निगौरसर्षपान् संस्पृश्याश्मनि तिष्ठन्तीत्येके ॥ २०

यत्र च प्रेतस्य प्राणा उत्क्रान्ता भवन्ति तत्रोदकमिश्रांस्तिलतण्डुलान् संप्रकिरन्ति—'स्वस्त्यस्तु वो*गृहाणामशेषे शिवं वास्त्वास्ताम्' इति ज्योतिष्कृत्वाऽगारं प्रविशन्ति ।

एकरात्रमुपोष्य तेषामक्षारलवणभोजनमधश्शयनं ब्रह्म चर्यं चा दशरात्रात् सायंप्रातस्तूष्णीमुपलेषु पिण्डं निवृ†णुयात् सायंप्रातस्सकृदुदकक्रिया ॥ २२

अथैषा पत्नी नाश्नीयात् पक्कान्नस्य ॥ २३

दशमेऽहानि त्रिरुदकमुत्सिञ्चन्ति सर्वेऽमात्याः ॥ २४

अथैकादश्यामेकोद्दिष्टं कुर्वन्ति ॥ २५

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
चतुर्थः खण्डः.

---

* ख—स्वस्ति वास्तु. † निप.

अथैके 'तूष्णीमितरेषाम्' इत्यत्रोदाहरन्ति—

भार्यासंज्ञिका नारी पुरुषो ब्राह्मणसंज्ञकः ।

त एते होतृसंस्कारा इतरे मन्त्रसंस्कृताः* ॥ इति ॥१

ता अनु व्याख्यास्यामः—अनुपेत उन्मत्तः जळोऽन्धो मूको बधिरः पङ्गुष्षण्डः कुष्ठी किलासी कुब्जः खञ्जः कुणिर्व्यसनी हीनाङ्गोऽधिकाङ्गस्सभागतो ब्राह्मणोऽनाथो राजन्योऽना हेताग्निर्वैश्यस्स्त्रियोऽनुत्पन्नपुत्राः कन्या विधवा कुत्सिनी वन्ध्या चेति । तेषां प्राणेषूत्क्रान्तेषु हिरण्यशकलमास्ये निधाय तूष्णीं स्नापयेत् । श्मशानं नीत्वाऽमन्त्रेण शाखया संमृजेत् । तूष्णीं तिलतण्डुलान् सन्निवपेत् । संप्रकीर्य चितां कल्पयित्वा चितायां प्रेतं निधायापसलैः परिस्तीर्याज्यमास्ये निनयेत्—'इदं त आत्मनश्शरीरमयं त आत्माऽऽत्मनस्त आत्मानं शरीरात् ब्रह्म निर्भिनत्ति भूर्भुवस्सुवरसा स्वाहा' इति । सा हि पूर्णाहुतिः । अपि वा—'अस्मात्त्वमधि जातोऽस्यं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा' इत्यनयर्चा वा 'वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यस्साध्येभ्यो मरुद्भ्य ऋभुभ्यः पितृभ्यस्स्वाहा' इत्यनेन यजुषा वा । अत्रैव मन्त्रेण सिग्वातेनोपवीजयन्ति । तूष्णीमुदकुम्भेनापसव्यं परिषिञ्चेत् ।

---

* ख—मन्त्रसंस्काराः.

उत्तपनीयेनाग्निना संयोजयेत् । नातीर्थेऽभिषिञ्चेत् । प्रसिद्ध-मेकादश्यामेकोद्दिष्टं कुर्वन्ति ॥ २

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
पञ्चमः खण्डः.

---

यथो एतन्न प्राक् चौळात्प्रमीतानां दहनं विद्यते ना-नुपनीतानां कन्यानां वा पितृमेध इत्युक्तम् । कथमु खल्वे-षामुक्तस्संस्कारो विद्यत इति ॥ १

असमाप्तशरीराणां गर्भाणां स्रवणमित्येके । गर्भस्रवणे 'इयं वा अग्निर्वैश्वानरोऽस्यामेवैनं जुहोति' इति ब्राह्मणम् । भूमौ निहत्य सचेलोऽवगाहेत सद्यश्शौचम् ॥ २

अदन्तजातानां निखननं प्रणवेन वा ॥ ३

दन्तजातानां व्याहृतिविधानेन वा । तस्य कः कर्मण उपक्रमो भवति? निर्मन्थ्यं कुर्यान्निर्मन्थ्येन स्त्रीकुमाराणां दहेयुरित्युक्तत्वात् । अथ ग्राम्येणालङ्कारेणालङ्कृत्य श्मशानं निर्हृत्य प्रेतं तत्रैव निधायाख्यातं चितायामुपकल्पनम् ॥

अपरेण चितामग्निमुपसमाधाय संपरिस्तीर्याज्यं विला-प्योत्पूय स्रुक्स्रुवं निष्टप्य संमृज्य पर्णमयेन स्रुवेण मध्य-मेन पलाशपर्णेन वा 'तथ्सवितुर्वरेण्यम्' इत्यनुद्रुत्यैकादश-कृत्वो गृह्णाति—'प्रजापतये स्वाहा' इति प्रथमामाहुतिं जु-होति 'प्रेतायामुष्मै यमाय वैवस्वताय स्वाहा' इति द्वितीयां

'दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तथ्सर्वं जुहोति' इति ब्राह्मणम् ॥ ५

पर्णमयस्रुवं प्रेतस्योपरिष्टान्निधाय 'भूः' इति मनसा ध्यायन्नुपोषेत् । 'भुवः' इत्युपस्थानं 'सुवः' इत्यवगाह्याप्सु निमज्योन्मज्योत्तीर्याचम्यैकमुदकाञ्जलिं ददाति ॥ ६

न चास्यात ऊर्ध्वं श्मशानं कर्तुमाद्रियेत नोदकक्रिया वा ॥

अयुग्मदिवसे त्रीन् पञ्च सप्त ब्राह्मणान् भोजयेदेकमपि वा ॥ ८

भवत्यामैर्वा मूलफलैः प्रदानमात्रं हिरण्येन वा प्रदान मात्रं सर्वेषु होतृपरेषु स्वधास्थानेषु कुर्यात् 'अमुष्मा उपतिष्ठतु' इति ॥ ९

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने

षष्ठः खण्डः.

---

आपद्युक्तं प्रेतविधानमेवं शस्त्रविषरज्जुजलाचलमारुततरुपाषाणहुताशनानुच्छ्वासनादिना मृतानां शरीरसंस्कारं वर्जयेत् ॥ १

देशान्तरमृते सङ्ग्रामहते व्याघ्रहते शरीरमादाय विधिना दाहयेत् ॥ २

अथ यद्येकाङ्गदर्शने पराङ्गस्य 'सप्तप्राणास्तदाश्रयाः' इति मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् अस्थीन्याहृत्य

तैः कृष्णाजिने पुरुषाकृतिं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् । हस्तकौशलैः पृथिवीशरीरं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत् । यदि तावन्न विन्देत पलाशवृन्तानां त्रीणि षाष्टिशतान्याहृत्य तैः कृष्णाजिने पुरुषाकृतिं कृत्वा मधुना सर्पिषा वाऽभ्यज्य विधिना दाहयेत्

अथ यदि जीवन् पुनरागच्छेत् घृतकुण्डे निमज्योत्तीर्य स्नापयित्वा जातकर्मादिसंस्कारान् क्रियेरन् द्वादशरात्रान्तानि व्रतानि त्रिरात्रान्तानि वा ॥ ४

अथ स्नानं ततस्तामेव जायां प्रतिपद्येत । तस्यामविद्यमानायामन्यां कुमारीं विन्देताथाग्निमाधाय व्रात्यैनैन्द्राग्नेन पशुनेष्ट्वा गिरिं गत्वाऽग्नये कामायेष्टिं* निर्वपेदत ऊर्ध्वमीप्सितैर्यज्ञक्रतुभिर्यजेतेति विज्ञायते ॥ ५

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने

सप्तमः खण्डः.

---

आहिताग्निश्चेत् प्रवसन् म्रियेत पुनस्संस्कारविधिं व्याख्यास्यामः—दर्भान् समान् संस्तीर्य तस्मिन् पलाशवृन्तैः पुरुषविकल्पं करोति चत्वारिंशता शिरः प्रकल्पयते । दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशतापञ्चाशतैकैकं बाहुं तेषा-

---

* गत्वाऽऽयुष्मतीमिष्टिं

मेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते । सप्तसप्तसप्तैवैकैकं पादं तेषामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्पयते । अष्टाभिश्शिश्नं द्वादशाभिर्वृषणमित्येतानि प्रोक्ष्याथ भूमौ हिरण्यं निधायारणी निधाय यां दिशं यजमानोऽगच्छत्तां दिशं प्रेक्षमाणो जपति—'उपावरोह जातवेदः' इति विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये पूर्णाहुतिं जुहोति—'सप्त ते अग्ने समिधस्सप्त जिह्वाः' इति ॥ १

अथ प्रेतसंस्कारमर्हतीत्याह भगवान् बोधायनः ॥ २

इति बोधयनीयपितृमेधसूत्रे तृतीयप्रश्ने
अष्टमः खण्डः

---

अथ गर्भिण्यामन्तर्वत्न्यां म्रियेतात ऊर्ध्वं श्मशानं नीत्वा दहनं जोषयेत् ॥ १

तस्य चितामपरेण सव्येन वा प्रेतस्योदरं लिखेत्—'हिरण्यगर्भस्समवर्तताग्रे' इत्यनुलेखनम् । कुमारं दृष्टमनुमन्त्रयते—'जीवतु मम पुत्रो दीर्घायुत्वाय वर्चसे' इति ॥ २

अथ कुमारं स्नापयेयुर्हिरण्यमन्तर्धाय जीवता ग्राममायान्ति—'यस्ते स्तनश्शशयः' इति स्तनं प्रदाय तमिस्नुदरेऽज्यानीर्जुहोति । 'शतायुधाय शतवीर्याय' इति पञ्च 'प्रयासाय स्वाहा, पूष्णे स्वाहा' इत्येतेनानुवाकेन च ॥ ३

अथ सूच्याऽव्रणं कुर्यात् प्रेतं चितामारोप्य विधिना दाहयेत् ॥ ४

अष्टकाधेनुं तिलधेनुं भूमिधेनुमिति च दद्यात् ॥ ५

प्रसिद्धमेकादश्यामेकोद्दिष्टं कुर्वन्ति ॥ ६

इति बोधायनपितृमेधे तृतीयप्रश्ने
नवमः खण्डः

---

अथातोऽस्थिसञ्चयनं व्याख्यास्यामः—निवृत्तेऽग्नौ करणे द्व्यहे त्र्यहे चतुरहे सप्ताहे वा नवकुम्भमादाय श्मशानं नीत्वा तं देशं गत्वा पालाशशङ्कुन्वोदुम्बरशङ्कुन्वा निहत्य अङ्गुष्ठेनोपकनिष्ठिकया मध्यमया वा सर्वाभिरङ्गुलीभिस्सर्वास्थीनि समुच्चित्य क्षीरेण प्रक्षाळ्य कुम्भेऽवधाय क्षीरेण प्लावयित्वा घृतं निनयेत्—'इदं त आत्मनश्शरीरमयं त आत्मा आत्मनस्त आत्मानं शरीरात् ब्रह्म निर्भिनत्ति भूर्भुवस्सुवरसौ स्वाहा' इति व्याहृतिभिरपि वा ॥ १

त्रिवृताऽन्नेन कुम्भमभ्यर्च्याथ यदि न दहेयुरुल्मूकात् पुनर्दहेयुः—'अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा' इति ॥ २

तथैवा पिधानात्कृत्वाऽस्थिकुम्भमादाय नदीतीर्थसमुद्रेषु वाऽभ्यवहरन्त्यपि वा पुरुषसंमितं गर्तं खात्वा तस्मिन् कुम्भ-

मवधाय पुनरभ्यर्च्य पुरीषेण प्रच्छादयेत् एतद्यावद्वसाति ताव त्स्वर्गे महीयते ॥ ३

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
दशमः खण्डः.

---

अथातः परिव्राजकस्य संस्कारविधिं व्याख्यास्यामः— पृथिव्यां 'अक्षीभ्यामोषधीभ्याम्' इति शरीरं निधाय 'भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इति उदरे पात्रं निधायाथ होतारमधीत्य तस्य दक्षिणे हस्ते कमण्डलुं निदधाति व्याहृतीभिर्देवयजनं पूरयेत् 'अग्निनाऽग्निस्समिध्यते' इत्यशेषसंस्कारोऽश्वमेधफलं तत्रोदाहरन्ति ॥ १

सृगालश्ववायसाः खादन्ति चेद्दोषमाहारयेत्कर्तुः । तस्मादविशङ्कां वेदिं प्रच्छादयेदिति बोधायनः ॥ २

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने
एकादशः खण्डः.

---

अथैषां पत्नी संवत्सरमधश्शयीत क्षारलवणमधुमांसानि कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यः ॥ १

सहस्रदक्षिणो वा पितृमेधस्तस्यार्धं कुर्वन्ति ॥ २

एतेन विधिना प्रेतं निर्हरति पश्यति पुत्रं पश्यति पौत्रं न शूद्रेषु जायते नानपत्यो जायते इत्याह भगवान् बोधायनः॥ ३

इति बोधायनीयपितृमेधसूत्रे तृतीयप्रश्ने

द्वादशः खण्डः.

---

अथैषां पत्नी । अथातः परिव्राजकस्य । अथातोऽस्थिसंचयम् । अथ यद्यन्तर्वत्नी । आहिताग्निश्चेत् । आपद्युक्तम् । यथो एतन्न प्राक्चौळात् । अथ हैके तूष्णीम् । इममग्ने चमसम् । यथा पिता पुत्रं पश्यति । अथाध्वर्युः प्राचीनावीती । अथातो द्विजातीनां दहनकल्पम्॥ ११

अथातो द्विजातीनां दहनकल्पम् । अथाध्वर्युः प्राचीनावीती । यथा पिता पुत्रं पश्यति । इममग्ने चमसम् । अथ हैके तूष्णीम् । यथो एतन्न प्राक्चौळात् । आपद्युक्तम् । आहिताग्निश्चेत् । अथ यद्यन्तर्वत्नी । अथातोऽस्थिसंचयम् । अथातः परिव्राजकस्य । अथैषां पत्नी ॥ १२

इति बोधायनीये पितृमेधसूत्रे

तृतीयः प्रश्नः समाप्तः

---

पितृमेधसूत्रं समाप्तम्.

---

# अथ पितृमेधशेषसूत्रम्.

अथावशिष्टप्रयोगे मरणसशंये ब्रह्म संस्मृत्य दश दानानि कृत्वा उत्क्रान्तिगां दद्यात् ॥ १

अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रान्तिविमुक्तये ।
तुभ्यं संप्रददाम्येनां गामत्रोत्क्रान्तिसंज्ञिताम् ॥ इति ॥ २

अथ पुत्रः पौत्रो दत्तको वा पत्नी दौहित्रो भ्राता तत्पुत्रः पिता स्वस्रीयस्सपिण्डो जामाता वा यथाक्रमं संस्कर्ता पितृमेधेन वा होतृकल्पेन वा ब्रह्ममेधेन वा यथा प्राप्तं संस्कुर्यात् ॥ ३

'ब्रह्म वै चतुर् होतारः' इति ब्रह्मचारिणं होतृकल्पेनैव । दुर्मृतानामुक्तकाले नारायणसंस्कारविधिना । जळादीनां कन्याकुमाराणामेकर्चा । अथ त्रिवर्षात् पूर्वं मृतानां व्याहृतीभिः दहेदथवा निखनेत् । दन्तजातानां प्रणवेन निखनेत् । अजातमृतानां तूष्णीं निखनेदिति । यथाविधि संस्कुर्यात् ॥ ४

अनुपनीतः पत्नी वा कर्ता चेन्मन्त्रवद्दहनमन्यत्सर्वं कारयेत् ॥ ५

द्विवर्षात्प्रागूढा बाला मृता स्यात्तां यामं भूमौ निक्षिप्य पितृमेधेन दहेदथ चिताम् । ब्राह्मणा भर्तारः कर्तारश्च भवन्ति ॥ ६

